॥ अस्माकं विदधातु वाञ्छितफलं श्रीवीतरागो जिनः ॥

कविराज-श्रीअमरचन्द्रसूरिविरचितः
अवचूरिसमेतः

# स्यादिशब्दसमुच्चयः


सौराष्ट्रराष्ट्रान्तर्गतदाठाग्रामनिवासिना
श्रावकोत्तंसश्रीमद्भगवदात्मजेन
पण्डितलालचन्द्रेण संशोधितः



वाराणस्यां
चन्द्रप्रभायन्त्रालये मुद्रापयि[illegible]
प्रकाशितः

वीरसंवत् २४[illegible]


मूल्यम् १० आणकाः

# प्रस्तावना।

सिद्धिश्रीपतेश्चरमतीर्थकरस्य श्रीमन्महावीरप्रभोर्जयवतः शासनसाम्राज्यस्य समुन्नतिकरा वाग्देवीलब्धवरा अत एव कविचक्रचक्रवर्त्तिनः श्रीअमरचन्द्रसूरयः श्वेताम्बरमतानुयायिन अमुं स्यादिशब्दसमुच्चयग्रन्थं विरचितवन्तः। एते सूरिप्रवराः कदा सुधावर्षिभिः स्ववचनैरिमां धरित्रीं पवित्रीचक्रुरिति जिज्ञासायामनेकग्रन्थपर्य्यालोचने प्रवृत्ते मलधारिश्रीराजशेखरसूरिभिः १४०५ विक्रमवर्षे विनिर्मिते प्रवन्धकोषे—

"अणहिल्लपत्तनासन्नं वायटं नाम महास्थानमास्ते चतुरशीतिमहास्थानानामन्यतमत्। तत्र परपुर[1]प्रवेशविद्यासंपन्नश्रीजीवदेवसूरिसंताने श्रीजिनदत्तसूरयो जगर्जुः। तेषां शिष्योऽमरो नाम प्रज्ञालचूडामणिः। स श्रीजिनदत्तसूरिभक्तात् कविराजादमरसिंहात् सिद्धसारस्वतं मन्त्रमग्रहीत्। तद्गच्छमहाभक्तस्य विवेकनिधेः कौष्ठागारिकस्य पद्मस्य विशालतमे सदनैकदेशे विजने एकविंशत्या वासरैर्निद्राजयाशनजयकषायजयादिदत्तावधानस्तं मन्त्रमजपत्। विस्तरेण होमं च चक्रे। एकविंशतितम्यां रात्रौ मध्यप्राप्तायां नभस्युदिताच्चन्द्रबिम्बान्निर्गत्य स्वरूपेणाऽऽगत्यामरं भारती करकमण्डलुजलमपीप्यत, वरं च प्रादात्—'सिद्धकविर्भव, निःशेषनरपतिपूजागौरवितश्चैधि' इति। वरं दत्त्वा गता भगवती। जातः कविपतिरमरः। रचितं काव्यकल्पलता नाम कविशिक्षा, छन्दोरत्नावली, मुक्तावली च। कलाकलापाऽऽह्वयं च शास्त्रं निबद्धम्, बालभारतं च। बालभारते च प्रभातवर्णने—

'दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता।

---

१ 'पुरं शरीरे' इति हैमः।

भवपरिभवक्लोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥'
(आदिपर्व-स० ११ । श्लो० ६)

इत्यत्र वेण्याः कृपाणत्वेन वर्णनात् 'वेणीकृपाणोऽमरः' इति बिरुदं कविवृन्दाल्लब्धम्, दीपिकाकालिदासवत् घण्टामाघवच्च । कवित्वप्रसिद्धेश्च महाराष्ट्रादिनरेन्द्राणां पूजा उपतस्थिरे । तदा वीसलदेवो राजा गुर्जराधिपतिर्धवलक्कके राज्यं प्रशास्ति । तेनामरकवेर्गुणग्रामः श्रुतः । ठक्कुरं वइजलं (?) प्रधानं प्रेष्य प्रातराहूतः कवीन्द्रः । आसनादिप्रतिपत्तिः कृता सभा महती । अमरेण पठितम्—

'वीक्ष्यैतद्भुजविक्रमक्रमचमत्कारं निकारं मयि
प्रेम्णो नूनमियं करिष्यति गुणग्रामैकगृह्याशया ।
श्रीमद्वीसलदेव ! देवरमणीवृन्दे त्वदायोधन-
प्रेक्षाप्रक्षुभिते विमुञ्चति परिरम्भान्न रम्भां हरिः ॥
त्वत्प्रारब्धप्रचण्डप्रधननिधनिताराातिर्वीरातिरेक-
क्रीडत्कीलालकुल्यावलिभिरलभत स्वदसा(?) कन्दमुर्वी ।
दम्भोलिस्तम्भभास्वद्भुजभुजग.. द्रुतुराभर्तुरेनां
तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥'

रञ्जिता सभा । प्रीणितः पृथ्वीपालः । ततो राज्ञा प्रोक्तम्—'यूयं कवीन्द्राः श्रूयध्वे ।' अमरोऽभिधत्ते—'सत्यमेव यदि गवेषयति देवः' । ततो नृपेण सोमेश्वरदेवे दृष्टिः संचारिता । ततः सोमेश्वरेण समस्याऽर्पिता । यथा – 'शीर्षाणां सैव वन्द्या नम नवतिरमूल्लोचनानामशीतिः' । अमरेण सद्यः समस्या पूरिता—

'कैषा भूषा शिरोऽस्मिन् तव भुजगपते ! रेखयामास भूत्या
धृते मन्मूर्ध्नि शंभुः सदशनवशता (९१०) नक्षपातान् त्रिलिख्य ।

---

१ तथा च हम्मीरमहाकाव्ये वर्णितम्—

कर्णीनामधिदेवता स्वयमसौ ख्याता कुमारी ततः प्रायो ब्रह्मवतां स्फुरन्ति सरसा वाचां विलासा ध्रुवम् । कुक्कोकः प्रकृती जितेन्द्रियचयो हर्षः स वात्स्यायनो ब्रह्मज्ञवरो महाव्रतवरो वेणीकृपाणोऽमरः ॥ इति.

गौरी स्त्रानञ्ज हष्टीर्जितनखनवभू (१९२०) स्तद्विशेषात् तदित्थं ।
शीर्षाणां सैव वन्ध्या मम नवति(९०)रभूल्लोचनानामशीतिः (८०) ॥'

ततो वामनस्थलीयकविसोमादित्येन समस्या दत्ता—'धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः'। अमरेणोक्तम्—

'भवस्याभूद् भाले हिमकरकलाग्रे गिरिसुता-
ललाटस्याश्लेषे हरिणमदपुण्ड्रप्रतिकृतिः ।
कपर्दस्तत्प्रान्ते यदमरसरित् तत्र तदहो !
धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ॥'

ततः कृष्णनगरवास्तव्येन कमलादित्येन समस्या वितीर्णा—'मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्'। अमरेण पुपूरे—

'तटविपिनविहाराच्छृङ्खलं यत्र यादो-
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ।
बत बक न कदाचित् किं श्रुतोऽप्येष वार्धिः ।
प्रतनुतिमिनि तल्ले क्वापि गच्छ क्षणेन ॥'

अथ वीसलनगरीयेण नानाकेन समस्या विश्राणिता—'गीतं न गायतितरां युवतिर्निशासु'। अमरेण पूरिता—

'श्रुत्वा ध्वनेर्मधुरतां सहसाऽवतीर्णे
भूमौ मृगे विगतलाञ्छन एष चन्द्रः ।
मा गान्मदीयवदनस्य तुलामितीव
गीतं न गायतितरां युवतिर्निशासु ॥'

एवमष्टोत्तरं शतं बहुकविदत्ताः पूरिताः समस्याः श्रीअमरेण । ततो राज्ञाऽभिहितम्—'सत्यं कविसार्वभौमः श्रीअमरः'। तत्र दिने संध्यावधि सभा निषण्णा स्थिता । राजा लङ्घितः सभ्यलोकोऽपि । 'रसावेशे हि कालो दैर्गच्छन्नपि न लक्ष्यते ।' द्वितीयदिने सद्यः काव्यमयैः प्रमाणोपन्यासैः प्रमाणिका जिताः । तृतीयदिने राज्ञा पृष्टम्—'अस्माकं संप्रति का चिन्ताऽस्ति' इति कथ्यताम् । अमरेण भणितम्—'देव ! कथं दूरं गता ? स्वर्गे ऐरावणस्य दक्षिणकर्णे लुकिता । भूपतिः स्वरग्वा (?) दमोदत

शिरोऽधुनोत् । नित्यं गमनागमनेन जिनधर्मासन्नः कृतो राजा चैत्येषु पूजाः कारयति । एकदा नृपेण पृष्टम्—'भवतां कः कलागुरुः' । अमरेण गदितम्—'अमरसिंहः कविराजः' इति । राजाऽऽह-'तर्हि प्रातरानेयः' । अमरचन्द्रेणाऽऽनीतः प्रातः कविराज उपराजम् । तदा राजा खड्गेन श्रमयन्नास्ते । राज्ञा पृष्टम्—'अयं कविराजः ?।' कविराजेन व्याजह्रे—'ओम्' इति । राजाऽऽह-'तर्हि वद कालोचितं किञ्चित्' अमरसिंहः कथयति—

'त्वत्कृपाणविनिर्माणशेषद्रव्येण वेधसा ।
कृतः कृतान्तसर्पस्तु करोद्वर्त्तनवर्तिभिः ॥ १ ॥
अच्छाच्छाभ्यधिकार्पणं किमपि यः पाणेः कृपाणे गुणः
संचक्राम स यद् ददौ सुपदवीं प्रत्यर्थिषु क्ष्मार्थिषु ।
तत्सङ्गान्न स बद्धमुष्टिरभवद् येनारिपृथ्वीभुजां
पृष्ठेषु स्वमपि प्रकाममुदितप्रोद्दामरोमोद्गमैः ॥२॥
कलयसि किमिह कृपाणं वीसल ! बलवन्ति शत्रुषु तृणानि ।
यानि मुखगामि तेषां न चैष लङ्घयितुमसमर्थः ॥ ३ ॥
देव ! त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखा भुज-
स्तत्र क्रीडति कज्जलाकृतिरसिर्धाराद्विजिह्वः फणी ।
एष स्वाङ्गमनर्गलं रिपुतरस्कन्धेषु संवेष्टयन्
दीर्घं व्योमविसारि निर्मलयशोनिर्मोकमुन्मुञ्चति ॥४॥'

अद्भुतकवितादर्शनात् कविराजो राजेन्द्रेण नित्यसेवकः कृतः । ग्रासो महान् प्रत्यष्ठापि । एकदा श्रीवीसलदेवेन भोजनान्ते तृणं करे धृत्वाऽमरसिंहोऽभिदधे—'इदं तृणं सद्यो वर्णय, यदि रुचितभङ्ग्या वर्णयसि ; तदा ग्रासद्वैगुण्यम् । अन्यथा सर्वग्रासत्याजनम्' । इत्युक्तिसमकालमेवाहतप्रतिभतया स ऊचे—

'क्षाराब्धिः शिखिनो मखा विषमयं श्वभ्रं क्षयीन्दुर्सुधा
प्राहुस्तत्र सुधामियं तु दनुजत्रस्तैव लीना तृणे ।
पीयूषप्रसवो गवां यदशनाद् दत्त्वा यदास्ये निजे
देव ! त्वत्करवालकालमुखतो निर्याति जातिर्द्विषाम् ॥'

चमत्कृतो भूपालः । प्रासद्वैगुण्यं कृतम् । कालान्तरे अमरेण कोष्ठागारिपद्मानन्दाऽऽख्यं शास्त्रं रचितम् । एवं कविताकल्लोलसाम्राज्यं प्रतिदिनम् ॥ इत्यमरचन्द्रकविप्रबन्धः ॥ " अतः स्पष्टमेव वीसलदेवनरदेवराज्ये श्रीअमरचन्द्रसूरीणां विद्यमानतेति । वीसलभूपालराज्यसमयस्तु विक्रमवर्षे १३००—१८ रूपो गुर्जरदेशभूपावल्यादिग्रन्थविलोकनतो निर्णीयते । तथाच सूरिप्रवराः त्रयोदश–चतुर्दश–शताब्दीमध्यकालिका एवेति निश्चीयते । स्यादिशब्दसमुच्चयविरचनसमयोऽपि स एव ॥ रत्नमंदिरगणिविरचितायामुपदेशतरङ्गिण्यां प्रसङ्गवशादिदं लिखितमस्ति । यथा—"एकदाऽमरचन्द्रमुनौ पर्षदि तत्कालकृतनव्यश्लोकैर्व्याख्यानं कुर्वति द्विपदी प्रोक्ता–

'अस्मिन्नसारे संसारे सारं सारङ्गलोचना'

वन्दनार्थमागच्छता द्वारस्थेन मन्त्रिणा ( वस्तुपालेन ) श्रुता । 'अहो ! रागी स्त्रीकथाकृद् मुनिः' इति ध्यात्वा न वन्दितः । ज्ञातमन्त्रिचित्ताभिप्रायेणाऽमरचन्द्रेण प्रोक्तम्—

'अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।
यत्कुक्षिप्रभवा एते वस्तुपाल ! भवादृशाः ॥'

तुष्टेन पादोपवेशनं कारितम् ।" शीघ्रकवित्वविषये एतदपि दृष्टान्तम् ॥

अस्मिन् ग्रन्थे ग्रन्थकृद्भिश्चत्वार उल्लासाः संस्थापिताः । तत्र प्रथमे स्वरान्तशब्दाः पुंस्त्रीनपुंसकलिङ्गाः सर्वे दर्शिताः । तथैव द्वितीये व्यञ्जनान्तशब्दाः प्रदर्शिताः । तृतीये सर्वनामगणवर्तिनः शब्दास्तथा चतुर्थे च सङ्ख्याशब्दाः सदृग्रूपा भिन्नरूपाश्च शब्दशास्त्रपाठकानामुपचिकीर्षया कथिताः सन्ति । स्यादिशब्ददीपिकायामवचूर्णौ ते सर्वेऽपि विशेषसूत्रप्रदर्शनपुरःसरं साधिताः । एवं सिद्धहेमचन्द्राभिधशब्दानुशासनाध्येतॄणां महोपकारी कातन्त्रव्याकरणपाठकानामपि बहुत्र स्थले उपयोगी चायं ग्रन्थः सुगुणरत्नाकरस्य मज्ज्येष्ठबान्धवस्य श्रीअभयचन्द्रस्य निर्देशेन मया संशोध्य स्वपरोपचिकीर्षया प्रसिद्धिमानीतः ।

अस्य ग्रन्थस्य मुद्रणावसरे मयैकमेवाऽऽदर्शपुस्तकं श्रीगुरुवर्य्य-शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणां लब्धम् । तदाधारेण महता परिश्रमेण शोधितमुद्रितेऽप्यस्मिन् ग्रन्थे मम मतिमान्द्याद् दृष्टिदोषात् प्रमादाद् वा यत्र क्वचनाशुद्धिः स्थिता जाता वा तत्र प्रकृतिकृपालवः सज्जनाः संशोधयिष्यन्ति । सफलयिष्यन्ति मत्परिश्रमं ग्राहकमहोदयाः । वर्धयिष्यन्ति च गुणज्ञाः समुत्साहं मदीयम् । इत्याशास्ते—

यशोविजयजैनपाठशाला
वाराणसी
अक्षयतृतीया

विदुषामनुचरो
लालचन्द्रः ।

ॐ नमः परमात्मने ।

श्रीमदमरचन्द्रसूरिविरचितः ।

# श्रीस्यादिशब्दसमुच्चयः

श्रीसारदां हृदि ध्यात्वा स्यादिशब्दसमुच्चयम् ।
करोत्यमरचन्द्राऽऽख्यो यतिः श्वेताम्बराग्रणीः ॥ १ ॥

शब्दाः पुल्लिङ्गाः स्त्रीलिङ्गाः स्युर्नपुंसकलिङ्गकाः ।
स्त्रीपुल्लिङ्गकाः पुंक्लीबलिङ्गाः स्त्रीक्लीबलिङ्गकाः ॥ २ ॥

त्रिलिङ्गका अलिङ्गाश्च वाच्यलिङ्गा अपि क्रमात् ।
नव प्रकाराः शब्दानां लिङ्गभेदो भवत्ययम् ॥ ३ ॥

स्वरान्ता व्यञ्जनान्ताश्च सर्वनामगणोदिताः ।
सङ्ख्यासमाश्रिताः शब्दा ज्ञेयाः प्रज्ञावता क्रमात् ॥४॥

अकारान्ताः स्मृताः पुंसि देव-मुख्याः समक्रियाः ।
मास-दन्त-पाद-यूषाः शसादौ भेदभाजिनः ॥ ५ ॥

नपुंसके स्मृतास्तुल्यक्रियाः कुण्ड-कुलाऽऽदयः ।
हृदयोदकाऽऽसनानां शसादावन्तरं पुनः ॥ ६ ॥

शुक्ल-कृष्णारुणाद्यास्तु वाच्यलिङ्गाः प्रकीर्त्तिताः ।
आकारान्ताश्च पुल्लिङ्गा हाहा-प्रभृतयः समाः ॥ ७ ॥

आकारान्ताः स्त्रियां श्रद्धा-शाला-मालाऽऽदयः समाः ।
जरा-निशा-नासिकाऽम्बार्थानां स्यादन्तरं पुनः ॥ ८ ॥

आकारान्ता वाच्यलिङ्गाः सोमपा-प्रमुखाः समाः ।
पुंसि तुल्या इकारान्ता अग्नि-विध्यादयो मताः ॥ ९ ॥
विशेषः सखि-पत्योस्तु पन्थि-मन्थि-ऋभुक्षिषु ।
इकारान्ताः स्त्रियां बुद्धि-मुख्या धूलि-मुखाः समाः ॥१०॥
वारि-प्रभृतयस्तुल्या इकारान्ता नपुंसके ।
अस्थि-दधि-सक्थ्यक्ष्णां तु विज्ञेयं पुनरन्तरम् ॥११॥
वाच्यलिङ्गाः शुचिप्रायाः सुबुध्याद्याः सदृक्क्रियाः ।
सुरभिर्भूरि-सुमति-दीर्घाङ्गुलि-मुखा अपि ॥१२॥
ईकारान्तास्तु पुल्लिङ्गास्तुल्या वातप्रमी-मुखाः ।
ईकारान्ताः स्त्रियां ज्ञेया नदी-मही-मुखाः समाः ।
लक्ष्मी-श्री-ह्री-धी-मुख्यानां स्त्रीशब्दस्य तथाऽन्तरम् ॥
ईकारान्ता वाच्यलिङ्गा अतिलक्ष्मी-मुखाः समाः ।
पृथुश्री-प्रमुखा भिन्नाः सेनान्युन्नी-मुखाः पृथक् ॥१४॥
भिन्ना यवक्री-नी-प्रातभी-महाग्नी-मुखास्तथा ।
शम्भ्वाद्याः पुंस्युकारान्ताः समाः क्रोष्टु-विवर्जिताः ॥१५॥
धेनु-मुख्या उकारान्ताः स्त्रीलिङ्गाः सदृशक्रियाः ।
जतु-प्राया उकारान्ताः समानाः स्युर्नपुंसके ॥१६॥
उकारान्ता वाच्यलिङ्गाः पटु-लघ्वादयः समाः ।
ऊकारान्ताः पुंसि हूहू-नग्नहू-प्रमुखाः समाः ॥१७॥
स्वयंभू-प्रतिभू-प्रायाः सदृशाः खलपूः पृथक् ।
एभ्यो वर्षाभू-पुनर्भू-शब्दयोरन्तरं मतम् ॥१८॥

स्त्रियामूदन्ता वध्वाद्याः समा भ्रूर्भूश्च भेदभाक् ।
समा वाच्यलिङ्गा अतिचमू प्राप्तवधू-मुखाः ॥१९॥
धातूदन्ता वाच्यलिङ्गाः सक्तुल्लू-प्रमुखाः समाः ।
भिन्नाः कटप्रू-लू-प्राप्तलू-महाप्रू मुखाः समाः ॥२०॥
ऋकारान्ताः पितृ भ्रातृ-मुखाः पुंसि समक्रियाः ।
नृशब्दस्यान्तरं प्रोक्तं षष्ठ्यन्तवचने सति ॥२१॥
स्त्रियां मातृ-मुखाः प्रोक्ता ऋकारान्ताः समक्रियाः ।
स्वस्रादीनां पितृष्वसृ-मातृष्वस्रोस्तथाऽन्तरम् ॥२२॥
वाच्यलिङ्गा ऋकारान्ताः कर्तृ-प्रभृतयः समाः ।
ॠकारान्ताः पितॄ-मुख्याः पुंसि तुल्यक्रियाः स्मृताः ॥२३॥
स्त्रियां पितॄ-मुखास्तुल्याः क्लीबे सुपितृवत् पुनः ।
ऌकारान्ता वाच्यलिङ्गाः प्रियक्लृ-प्रमुखाः समाः ॥२४॥
ॡकारान्ता वाच्यलिङ्गाः प्रियक्लॄ-प्रमुखास्तथा ।
एकारान्ताः से-परमे-मुख्यास्तुल्यक्रिया मताः ॥२५॥
ऐकारान्तो रैः पुंनार्योरोकारान्तस्तथैव गोः ।
औकारान्तो ग्लौः पुल्लिङ्गे नौः स्त्रीलिङ्गे समक्रियौ ॥२६॥

इति स्यादिशब्दसमुच्चये स्वरान्तशब्दोल्लासः ॥ १ ॥

वाच्यलिङ्गाः कवर्गान्ताः स्वस्वोक्तप्रक्रियाजुषः ।
पुंसि स्त्रियां च सदृशा भेदभाजो नपुंसके ॥ १ ॥
चन्ताः पुंस्यम्बुमुच् प्रायाः स्त्रियां वाच्-प्रमुखाः समाः ।
वाच्यलिङ्गाः स्निग्धत्वच्-मूलवृश्च्-सुकुञ्च्-मुखा मताः ॥

प्राञ्चपाञ्चू-प्रमुखास्तुल्याः प्रत्यञ्चू-मध्वञ्चू-मुखाः समाः।
उदञ्चू भिन्नः पृथग् तिर्यञ्चू सध्यूञ्चू-सम्यञ्चू समाविमौ॥
विष्वद्र्यञ्चू-देवद्र्यञ्चौ च सर्वद्र्यञ्चू-प्रमुखास्तथा।
अदमुयञ्चमुद्र्यञ्चमुमुयञ्चदद्र्यञ्चपि॥ ४॥
गोञ्चू पृथग् दृषदञ्चू-मुख्या भिन्नाः प्राञ्चादयोऽर्चने।
वाच्यलिङ्गाः समाश्छन्ताः पुंसि जन्ता वणिज्-मुखाः॥५॥
राज्-सम्राजौ समावृत्विज् भिन्ना रुज्-स्रज्-मुखाः स्त्रियाम्।
क्लीबे त्वसृज्-मुखा वाच्यलिङ्गा देवेज्-मुखाः समाः॥६॥
धानाभ्रस्ज् भेदभाक् तृष्णज्-युज्-बहूर्ज्-प्रमुखाः पृथग्।
झन्ता ञन्ता टवर्गान्ता वाच्यलिङ्गाः प्रकल्पिताः॥७॥
तन्ताः पुंसि मरुन्मुख्याः स्त्रियां विद्युन्मुखाः समाः।
क्लीबे जगन्मुखास्तत्र यकृतः शकृतोऽन्तरम्॥ ८॥
वाच्यलिङ्गा महन्त्-मुख्याः शन्तृङन्ताश्च सान्तराः।
करिष्यन्त्-स्वजित्-कृतवन्त्-यावन्त्-इयन्त्-मुखास्तथा॥९॥
थन्ता मता वाच्यलिङ्गास्तकमथ्-प्रमुखाः समाः।
दन्ताः क्रव्याद्-मुखाः पुंसि स्त्रियां तुल्या दृषद्-मुखाः॥१०॥
वाच्यलिङ्गास्तत्त्वविदाद्या व्याघ्रपाद्-मुखा अपि।
धन्ताः स्त्रियां समिध्-मुख्या वाच्यलिङ्गास्तु संमताः॥११॥
मृगाविध्-मर्माविध्-त्रिकुध्-प्रमुखा ज्ञानबुध् तथा।
नन्ताः पुंस्यात्मनो मुख्या राजन्-मुख्याश्च सान्तराः॥१२॥

भेदः श्व-युव-मघोनामिन्-हन्-पूषार्यमाऽन्वितास् ।
विशेषः प्रतिदीव्नोऽस्ति स्त्रियां सीमन्-मुखाः समाः ॥१३॥
क्लीबे सामन्-मुखास्तुल्याः पर्व्वजन्मादयः पृथक् ।
अह्नो भेदो वाच्यलिङ्गा बहुराजन्-मुखा मताः ॥१४॥
पन्तोऽप् स्त्रियां वाच्यलिङ्गाः शुच्यप्-मण्डपलिप्-मुखाः ।
फन्ता बन्ता वाच्यलिङ्गा अरितुफ्-पुत्रचुम्ब्-मुखाः ॥१५॥
भन्ताः स्त्रियां ककुभ्-मुख्या वाच्यलिङ्गा विदभ्-मुखाः ।
मन्ता यन्ता वाच्यलिङ्गाः प्रातशमव्ययादयः ॥१६॥
रन्ताः स्त्रियां गिर्-धुर्-मुख्या वाच्यलिङ्गा सुगिर्-मुखाः ।
तथा लन्ता विमल् तुल्या वन्ता दिव्-प्रमुखाः स्त्रियाम् ॥१७॥
वाच्यलिङ्गाः सुदिव्-प्रायाः शन्ता विश् पुंसि तु स्त्रियाम् ।
दिश्-समा वाच्यलिङ्गा नश्-जीवनश्-दृष्टदिश्-समाः ॥१८॥
षन्ता द्विषादयः पुंसि प्रावृष्-प्रभृतयः स्त्रियाम् ।
वाच्यलिङ्गाः सुवर्णमुष् मुख्याः सजुष् दधृष् तथा ॥१९॥
सन्ता वेधो-मुखाः पुंसि दोस्-पुंसोरन्तरं मतम् ।
उशनः-पुरुदंशोऽनेहसां भेदः स्त्रियां पुनः ॥२०॥
सुमनोऽप्सरो-भास्-मुख्याः क्लीबे सन्ता महो-मुखाः ।
इसन्ताः सर्पिः-प्रमुखा उसन्ताश्च वपुर्निभाः ॥२१॥
वाच्यलिङ्गा बहुविधास्तास्थिवस्-प्रमुखा मताः ।
हन्ताः पुल्लिङ्गास्तुरासाह्-पृष्ठवाह्-सदृशा मताः ॥२२॥

स्त्रियामुपानह्-सदृशा वाच्यलिङ्गा मुहादयः ।
क्षन्ता वाच्यलिङ्गाः काष्ठतक्ष्-गोरक्ष्-प्रमुखा मताः ॥२३॥

इति स्यादिशब्दसमुच्चये व्यञ्जनान्तशब्दोल्लासो द्वितीयः॥२॥

सर्वनामगणेऽन्यादिर्डतमप्रत्ययावधिः ।
पूर्वादिरन्तरान्तस्तु त्यदादिर्व्यत्रधिः पुनः ॥१॥
युष्मदस्मद्-भवन्तश्च स्वस्वोक्तप्रक्रियास्पृशः ।
पूर्वादियुक्तस्त्वन्यादिर्गणः किंचित् पृथक्क्रियः ॥२॥

इति स्यादिशब्दसमुच्चये सर्वनामगणोल्लासः तृतीयः ॥३॥

एकाद्याः सङ्ख्याशब्दाः स्युः स्वस्वोक्तप्रक्रियास्पृशः ।
पुंस्त्रीलिङ्गाः फणरथोर्म्मीषुध्यूरु-मुखा मताः ॥१॥
पुंनपुंसकलिङ्गास्तु व्यलीक-पुस्तकाऽऽदयः ।
स्त्रीक्लीबलिङ्गा नासीर-मृगव्य-नगराऽऽदयः ॥२॥
स्वतस्त्रिलिङ्गाः कंदल-मृणाल-शकटाऽऽदयः ।
अलिङ्गका युष्मदस्मद्-ष्णान्ता सङ्ख्या डतिस्तथा ॥३॥

इति श्रीमद्वायटगच्छीयश्रीजिनदत्तसूरिशिष्यपण्डित-
श्रीमदमरचन्द्रानुस्मृते स्यादिशब्दसमुच्चये
सङ्ख्याशब्दोल्लासश्चतुर्थः ॥ ४ ॥

अर्हम्

॥ श्रीविजयधर्मसूरिगुरुभ्यो नमः ॥

श्रीअमरचंद्रसूरिविरचित–स्यादिशब्ददीपिकया सहितः

# श्रीस्यादिशब्दसमुच्चयः ।

श्रीसारदां[1] हृदि ध्यात्वा स्यादिशब्दसमुच्चयम् ।
करोत्यमरचंद्राऽऽख्यो यतिः श्वेताम्बराग्रणीः ॥ १ ॥
शब्दाः पुंल्लिङ्गाः स्त्रीलिङ्गाः स्युर्नपुंसकलिङ्गकाः ।
स्त्रीपुंल्लिङ्गकाः पुंक्लीबलिङ्गाः स्त्रीक्लीबलिङ्गकाः ॥ २ ॥
त्रिलिङ्गका अलिङ्गाश्च वाच्यलिङ्गा अपि क्रमात् ।
नवप्रकारः शब्दानां लिङ्गभेदो भवत्ययम् ॥ ३ ॥
स्वरान्ता व्यञ्जनान्ताश्च सर्वनामगणोदिताः ।
सङ्ख्यासमाश्रिताः शब्दा ज्ञेयाः प्रज्ञावता क्रमात् ॥४॥
अकारान्ताः स्मृताः पुंसि देव-मुख्याः समक्रियाः ।
मास-दन्त-पाद-यूषाः शसादौ भेदभाजिनः ॥ ५ ॥

देवप्रक्रिया सुगमा परं देवाः–इत्यत्र जसि अपवादत्वात् समानदीर्घबाधकस्य "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यस्य बाधको "अत आः स्यादौ जस्भ्याम्ये" ॥१।४।१॥ इत्यनेन आकारः । मासादीनां विशेषो यथा—"मासनिशाऽऽसनस्य शसादौ लुग् वा" ॥२।१।१००॥ इति मासान्, मासः । मासेन, मासा । मासाभ्याम्, मासशब्दस्य भ्यामि अने-

---

१ दन्त्यसकारादिः सरस्वतीवाचकोऽस्ति इति शब्दरत्नावली ।

नान्तलोपे 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यकारस्य स्थानित्वेन "सो रुः" ॥ २।१।७२ ॥ रुत्वाभावे "धुटस्तृतीयः" ॥ २।१।७६ ॥ इति दत्वम्। अत्र तु न्यायस्य अनित्यत्वात् माद्भ्याम् इति मन्यते भाष्यकृत् । दुर्गस्तु मास्भ्याम् इति । सिद्धहेमव्याकरणे तु द्वयमपि भवति । एवं सर्वत्र । सुपि मासेषु, "अघोषे प्रथमोऽशिटः" ॥१।३।५०॥ सत् मात्सु, "शिटया-धस्य द्वितीयो वा" ॥१।३।५९॥ माथ्सु ॥ दन्तादिषु ३ "दन्तपाद-" ॥ २।१।१०१ ॥ इत्यादिसूत्रेण शसादौ दत्, पद्, यूषन् आदेशाः स्युः ॥ दन्तान्, दतः । दन्तेषु, दत्सु, दथ्सु ॥ पादान्, पदः । पादेषु, पत्सु, पथ्सु ॥ यूषान्, "अनोऽस्य" ॥ २।१।१०८ ॥ इत्यलोपे "रषृ-" ॥२।३।६३॥ णत्वे च यूष्णः । यूषाभ्याम्, "नाम्नो नोऽनह्नः" ॥२।१। ९१॥ नलोपे यूषभ्याम् । ङौ यूपे, "ईङौ वा" ॥२।१।१०९॥ वा अलोपे यूष्णि, यूषणि ॥ इत्यादि ॥ ५ ॥

## नपुंसके स्मृतास्तुल्यक्रियाः कुण्ड-कुलादयः ।
## हृदयोदकाऽऽसनानां शसादावन्तरं पुनः ॥ ६ ॥

"अतः स्यमोऽम्" ॥१।४।५७॥ "औरीः" ॥१।४।५६॥ "नपुं-सकस्य शिः" ॥१।४।५५॥ "स्वराच्छौ" ॥१।४।६५॥ "नि दीर्घः" ॥१।४।८५॥ ५ सूत्राणि ॥ कुण्डं कुण्डे कुण्डानि २ । शेषं देववत् ॥ "दन्तपाद-" ॥ २।१।१०१ ॥ इत्यादिना शसादौ हृदयस्य वा हृद् । उदकस्य वा उदन् । कुण्डवत् ५ रूपाणि ॥ शसि हृदयानि, पक्षे "धुटां प्राक्" ॥ १।४।६६ ॥ नोन्ते हृन्दि । हृदा हृद्भ्यामित्यादि ॥ "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ हृत्सु, हृथ्सु ॥ कुण्डवत् ५ रूपाणि । उदकानि, "नि दीर्घः" ॥ १ । ४ । ८५ ॥ उदानि । उदकेन, "अनो ऽस्य" ॥२।१।१०८॥ उद्ना । उदकाभ्याम्, उदभ्याम् । ङौ उदके, "ईङौ वा" ॥ २।१।१०९ ॥ उदनि उद्नि ॥ "मासनिशा"- ॥ २।१।१०० ॥ इत्यादिना शसादौ आसनस्य अन्तलोपे आसन् । आसनानि, "नि दीर्घः" ॥१।४।८५॥ आसानि । आसनेन, "अनोऽस्य" ॥२।१।१०८॥ आस्ना । आसनाभ्याम्, "स्वरस्य परे प्राग्विधौ" ॥७ । ४ । ११०॥ इत्यकारस्य स्थानित्वात् नलोपाभावे आसन्भ्याम् ॥ ङौ आसने, आसनि, आस्नि ॥६॥

**शुक्ल-कृष्णारुणाद्यास्तु वाच्यलिङ्गाः प्रकीर्त्तिताः।**
**आकारान्ताश्च पुल्लिङ्गा हाहा-प्रभृतयः समाः ॥ ७ ॥**

शुक्लाद्याः पुंसि देववत्। स्त्रियामाप्प्रत्यये शालावत्। क्लीबे कुण्डवत्। हाहाऽऽदीनां स्वरे सन्धिः। अघुट्स्वरे तु "लुगातोऽनापः" ॥ २ । १ । १०७ ॥ इत्यन्तलोपः। हाहाः हाहौ हाहाः। हाहां. हाहः। हाहा हाहाभ्याम्०। आ० हे हाहाः ॥ ७ ॥

**आकारान्ताः स्त्रियां श्रद्धा-शाला-मालादयः समाः।**
**जरा-निशा-नासिकाऽम्बार्थानां स्यादन्तरं पुनः ॥ ८ ॥**

श्रद्धा सि "दीर्घङ्याब्व्यञ्जनात् सेः" ॥ १ । ४ । ४५ ॥ श्रद्धा। "औता" ॥ १ । ४ । २० ॥ श्रद्धे। श्रद्धाः। श्रद्धां० श्रद्धाः। "टौस्येत्" ॥ १ । ४ । १९ ॥ श्रद्धया श्रद्धाभ्याम्०। "आपो ङितां यैयास्यास्याम्" ॥ १ । ४ । १७ ॥ श्रद्धायै०। श्रद्धयोः श्रद्धानाम्। आ० "एदापः" ॥ १ । ४ । ४२ ॥ हे श्रद्धे हे श्रद्धे हे श्रद्धाः। जरादीनां विशेषो यथा—जरा "जराया जरस् वा" ॥ २ । १ । ३ ॥ स्वरादौ वा जरस् आदेशः ॥ विकल्पपक्षे व्यञ्जनादौ च श्रद्धावत् ॥ जरा। जरसौ, जरे। जरसः, जराः ॥ इत्यादि ॥ ..................जरामतिक्रान्त इत्यन्यपदार्थे "गोश्चान्ते—" ॥ २ । ४ । ९६ ॥ इत्यादिसूत्रेण ह्रस्वः। ह्रस्वत्वे कृते 'एकदेशविकृतमनन्यवत्' इति न्यायात् जरसादेशः। पुल्लिङ्गे—अतिजरः अतिजरसौ, अतिजरौ अतिजरसः, अतिजराः। अतिजरसा अत्र परत्वात् नित्यत्वाच्च प्रागेव जरसादेशे कृतेऽदन्तत्वाभावः। अन्ये तु प्रागेवेनादेशं 'सन्निपातलक्षण-' न्यायस्य अनित्यत्वाऽऽश्रयणात् पश्चात् जरसादेशं चेच्छन्तोऽतिजरसिना इत्यपि मन्यन्ते। पक्षे अतिजरेण अतिजराभ्याम् एसादेशेनैव सिद्धे ऐस्करणं 'सन्निपातलक्षण-' न्यायस्य अनित्यत्वज्ञापनार्थं तेन अतिजरसैः। अन्ये तु अतिजरैरित्येवेच्छन्ति। ऐस्करणादतिजरसैरेतत् ज्ञापकम् 'ज्ञापकज्ञापिता विधयो ह्यनित्याः' इति 'एकदेशविकृतमनन्यवत्' इति न्यायेन ऐस्करणे जराशब्द आकारान्तो न ज्ञेयः। तेनैव अतिजरैः। अतिजरसः, अतिजरात्। केचित् तु प्रागेवादादेशे जरसादेश-

अग्रेगा इन्द्रः। उदधिका विष्णुः। विकषाः शम्भुः। गोषाः रविः। अब्जजा ब्रह्मा। इति संज्ञात्वेऽप्येते॥ अग्नि "इदुतोऽस्त्रेरीदूत्" ॥ १। ४। २१॥ "जस्येदोत्" ॥ १। ४। २२॥ "टः पुंसि ना" ॥ १। ४। २४॥ "ङित्यदिति" ॥ १। ४। २३॥ "एदोद्भ्यां ङसिङसो रः" ॥ १। ४। ३५॥ "ङिर्डौ" ॥ १। ४। २५॥ "ङित्यन्त-स्वरादेः" ॥ २। १। ११४॥ "ह्रस्वस्य गुणः" ॥ १। ४। ४१॥ ८॥ अग्निः अग्नी अग्नयः। अग्निम् अग्नीन्। अग्निना अग्निभ्याम्०॥ अग्नये। अग्नेः २। अग्न्योः २। अग्नीनां। अग्नौ० अग्निषु॥ आ० हे अग्ने०॥ ९॥

## विशेषः सखि-पत्योस्तु पथि-मथि-ऋभुक्षिषु।
## इकारान्ताः स्त्रियां बुद्धि-मुख्या धूलि-मुखाः समाः॥१०॥

सौ "ऋदुशनस्-" ॥ १। ४। ८४॥ सखा "सख्युरितो-" ॥ १। ४। ८३॥ सखायौ सखायः॥ सखायम् सखीन्॥ "न नाङि-देत्" ॥ १। ४। २७। सख्या सख्ये। "खितिखीती-" ॥ १। ४। ३६॥ सख्युः २॥ "केवलसखि-" ॥ १। ४। २६॥ सख्यौ॥ शेषमग्निवत॥ आ० हे सखे हे सखायौ हे सखायः॥ "न नाङिदेत्" ॥ १। ४। २७॥ पत्या पत्ये॥ "खितिखीती-" ॥ १। ४। ३६॥ पत्युः २॥ "केवलसखि-" ॥ १। ४। २६॥ पत्यौ॥ शेषोऽग्निवत्। सपूर्वस्तु सर्वत्राग्निवत् पतिः॥ सखिस्तु सपूर्वः-प्रियसखा प्रियसखायौ प्रिय सखायः॥ प्रियसखायं प्रियसखायौ प्रियसखीन्। अग्रेऽग्निवत्॥ आ० हे प्रियस, ३ खे, खायौ, खायः। अत्र ग्रन्थे कातन्त्रानुसारात् पथ्यादयः ३ शब्दा इकारान्तत्वादिना उपात्ताः। व्याकरणे तु पथिन् मथिन् ऋभुक्षिन् इति रीत्या नकारान्तत्वेन। अतस्तत्र इयं प्रक्रिया-"पथिन्मथि-" ॥ १। ४। ७६॥ सौ नस्य आः "एः" ॥ १। ४। ७७॥ इति इकारस्य आः "थो न्थ्" ॥ १। ४। ७८॥ पन्थाः। "एः" ॥ १। ४। ७७॥ "थो न्थ्" ॥ १। ४। ७८॥ पन्थानौ पन्थानः। पन्थानं पन्थानौ "इन् ङीस्वरे लुक्" ॥ १। ४। ७९॥ पथः। पथा "नाम्नो नोऽनह्नः" ॥ २। १। ९१॥ नलोपे पथिभ्याम्। आ० हे पन्थाः

हे पन्थानौ हे पन्थानः ॥ एवं मथिन् ॥ ऋभुक्षाः ऋभुक्षाणौ ऋभुक्षाणः । ऋभुक्षाणं ऋभुक्षाणौ "इन् ङीस्वरे लुक्" ॥ १ । ४ । ७९ ॥ ऋभुक्षः । ऋभुक्षिभ्याम्० । ऋभुक्षिषु । आमन्त्रणेऽप्येवं ॥ स्त्रियां सुपथी नदीवत् ॥ क्लीबे सुपथि सुपथिनी सुपथीनि २ । आ० "क्लीबे वा" ॥ २ । १ । ९३ ॥ हे सुपथिन्, हे सुपथि । अत्र नित्यत्वात् सेर्लुप्यपि सेरभावात् आ न स्यात् ॥ एषां स्त्रीत्वात् शसः सस्य नो न ॥ बुद्धिः "स्त्रिया ङितां वा दैदास् दास् दाम्" ॥ १ । ४ । २८ ॥ बुद्ध्यै, बुद्धये । बुद्ध्याः, बुद्धेः २ । बुद्ध्यां, बुद्धौ ॥ शेषं अग्निवत् ॥ धूल्यादीनां तु "इतोऽक्त्यर्थात्" ॥ २ । ४ । ३२ ॥ इति ङीप्रत्यये धूली-भूमी-मुख्या नदीवत् ॥ बुद्धि-मत्यादीनां तु क्तिनिष्पन्नत्वात् ङीर्न ॥ १० ॥

**वारि-प्रभृतयस्तुल्या इकारान्ता नपुंसके ।**
**अस्थि-दधि-सक्थ्यक्ष्णां तु विज्ञेयं पुनरन्तरम् ॥११॥**

"अनतो लुप्" ॥ १ । ४ । ५९ ॥ वारि "औरीः" ॥ १ । ४ । ५६ ॥ "अनाम्स्वरे नोन्तः" ॥ १ । ४ । ६४ ॥ वारिणी "स्वराच्छौ" ॥ १ । ४ । ६५ ॥ "नि दीर्घः" ॥ १ । ४ । ८५ ॥ वारीणि अत्र इनो लाक्षणिकत्वात् "इन्हन्पूषा-" ॥ १ । ४ । ८७ ॥ इत्यादिना न दीर्घः ॥ लाक्षणिकस्य अनित्यत्वात् केचित् "इन्हन्-" ॥ १ । ४ । ८७ ॥ इत्यादिना दीर्घमपि कुर्वन्ति ॥ वारिणा वारिभ्यां वारिभिः । वारिणे० । आमि नागमाभावात् "ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ आम् नाम् "दीर्घो नाम्य-" ॥ १ । ४ । ४७ ॥ वारीणाम् । वारिणोः वारिषु । आ० "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ हे वारे, हे वारि हे वारिणी हे वारीणि ॥ एवं भूरि-मुख्याः ॥ भूरिः स्वर्णवाची क्लीबे । प्रचुर-वाची वाच्यलिङ्गः ॥ अ० वारिवत् ॥ अस्थिनी अस्थीनि २ ॥ टादौ स्वरे "दध्यस्थि-" ॥ १ । ४ । ६३ ॥ "अनोऽस्य" ॥ २ । १ । १०८ ॥ अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने० । अस्थ्नोः २ । अस्थ्नाम् । "ईङौ वा" ॥२।१।१०९॥ अस्थ्नि, अस्थनि० अस्थिषु । आ० हे अस्थे, हे अस्थि हे अस्थिनी हे अस्थीनि ॥ एवं दध्यादयोऽपि ३ ॥ अक्षि अक्षिणी अक्षीणि इत्यादि ॥ एवमत्यस्थ्यादयोऽपि ॥ अत्यस्थिः अत्यस्थी अत्यस्थयः ।

अत्यस्थिम्० अत्यस्थीन्। अत्यस्थ्ना अत्यस्थिभ्याम् अत्यस्थिभिः। अत्यस्थ्ने० इत्यादि॥ स्त्रियां प्रियास्थिः प्रियास्थी प्रियास्थयः। प्रियास्थिम् प्रियास्थी प्रियास्थीः॥ प्रियास्थ्न्या अतिदध्न्या इत्यत्र अनादेशे नान्तत्वात् ङीः॥ एवं प्रियास्थ्न्यै इत्यादि॥ क्लीबे पूर्वमुख्यवत्। टादौ स्वरे "वाऽन्यतः पु-" ॥१।४।६२॥ प्रियास्थ्ना प्रियास्थिना कुलेन इत्यादि॥ इकार–ईकारान्ता एकार–ऐकारान्ता अन्यपदार्थत्वेन क्लीबे इकारान्ताः यथा-अतिनदि, प्रियनारि, जितपृथ्वि, जितासि, अतिरि इत्यादि तेऽपि वारिवत्॥ टादौस्वरे "वाऽन्यतः पुमां-" ॥ १।४।६२॥ वा पुंस्त्वम्॥ अतिनदिने, अतिनद्ये इत्यादि॥ अतिरिशब्दस्य तु 'एकदेशविकृतस्य' अनित्यत्वाद् व्यञ्जनादौ स्यादौ "आ रायो व्यञ्जने" ॥२।१।५॥ इत्यात्वम् अतिराभ्यां कुलाभ्याम्। शेषमतिनदिवत्। टादौ स्वरे अतिरिणा पुंस्त्वे ह्रस्वाभावः अतिराया इत्यादि॥ सुसखि, सुपितृ अत्रापि "वाऽन्यतः–" ॥१।४।६२॥ इति टादौ स्वरे वा पुंस्त्वम्। आ० तु व्यवस्थितविभाषाऽऽश्रयणात् "नामिनो लुग् वा" ॥१।४।६१॥ इति न भवति तेन हे सुसखि हे सुपितृकुलम्॥ ११॥

**वाच्यलिङ्गाः शुचिप्रायाः सुबुध्याद्याः सदृक्क्रियाः।**
**सुरभिर्भूरि-सुमति-दीर्घाङ्गुलि-मुखा अपि॥ १२॥**
**ईकारान्तास्तु पुल्लिङ्गास्तुल्या वातप्रमी-मुखाः।**

सुरभि भूरि-सुमति-दीर्घाङ्गुलि-सुवारिमुख्या वाच्यलिङ्गाः पुंसि अग्निवत्। स्त्रियां शसि सस्य नत्वं टाया ना इति न शेषमग्निवत्। शुचिशब्दः स्वत एव त्रिलिङ्गोऽस्ति ततो यदा तस्य स्त्रियां प्रयोगः तदा बुद्धिवत्। क्लीबे वारिवत्। वाच्यलिङ्गव्यवस्थायां तु टादौ स्वरे "वाऽन्यतः–"॥ १।४।६२॥ इति वा पुंस्त्वम्। टायां रूपे समे। आमि तु एका प्रक्रिया। वाच्यलिङ्गाऽऽमन्त्रणे हे शुचि। एव सुरभ्याद्याः क्लीबे। सुबुध्याद्या अप्येवं वाच्यलिङ्गाः। वाताभिमुखगामुको मृगः वातप्रमीः सर्वत्र स्वरे सन्धिः। अमि वातप्रमीम्। शसि वातप्रमीन्। आमि वातप्रम्याम्। ङौ वातप्रमी। आ० हे वातप्रमीः॥ १२॥

ईकारान्ताः स्त्रियां ज्ञेया नदी-मही-मुखाः समाः ।
लक्ष्मी-श्री-ह्री-धीमुख्यानां स्त्री-शब्दस्य तथाऽन्तरम् ॥१३॥

"दीर्घङ्याब्—" ॥ १ । ४ । ४५ ॥ नदी नद्यौ नद्यः । नदीम् नदीः । नद्या नदीभ्याम् नदीभिः । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नद्यै नद्याः २ नदीनाम् । नद्याम् नदीषु । आ० "नित्यदित्—" ॥ १।४।४३ ॥ इति हे नदि । एवं मही-नखी-प्लवी-कुमारी-मुख्याः । लक्ष्मीः, अवीः, तरीः, सूरीः, तन्द्रीः, तन्त्रीः । तथा श्रीः, ह्रीः, भीः, धीः । इत्येषां लक्ष्म्यादीनामुणादीकारान्तत्वम् । श्रीआदीनां धात्वीकारान्तत्वमतो ङ्यभावात् सिलोपो न । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ लक्ष्म्यै० । लक्ष्म्याः २ लक्ष्मीणाम् । आ० "नित्यदिद्द्विस्वरा—" ॥ १ । ४ । ४३ ॥ हे लक्ष्मि ॥ श्रीः श्रियौ श्रियः । श्रियम् श्रियः । "वेयुवो—" ॥ १ । ४ । ३० ॥ श्रियै, श्रिये । श्रियाः, श्रियः २ । "आमो नाम् वा" ॥ १ । ४ । ३१ ॥ श्रीणां, श्रियाम् । श्रियि । आ० हे श्रीः । "दीर्घङ्याब्—" ॥ १ । ४ । ४५ ॥ स्त्री "स्त्रियाः" ॥ २ । १ । ५४ ॥ इय् स्त्रियौ स्त्रियः । "वाऽम्शसि" ॥ २ । १ । ५५ ॥ स्त्रियं, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया स्त्रीभ्याम् । "वेयुवो—" ॥ १ । ४ । ३० ॥ इत्यत्र अस्त्रिया इति निर्देशात् परादपि इयुव्यत्वादिकार्यात् प्रागेव स्त्रीदूदाश्रितं कार्यं स्यात् । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नित्यं दै स्त्रियै । स्त्रियाः २ । स्त्रियोः २ स्त्रीणाम् । स्त्रियां० स्त्रीषु । आ० "नित्यदिद्—" ॥ १ । ४ । ४३ ॥ इति हे स्त्रि हे स्त्रियौ हे स्त्रियः । स्त्रियमतिक्रान्तो योऽसौ अतिस्त्रिः अतिस्त्रियौ "इदुतोऽस्त्रेः—" ॥ १ । ४ । २१ ॥ इत्यत्र इदमेवाऽस्त्रिग्रहणं ज्ञापकं 'परेणापीयादेशेन कार्यं न बाध्यते' अतिस्त्रयः । एवमग्रेऽपि । "वाऽम्शसि" ॥ २ । १ । ५५ ॥ अतिस्त्रिम् अतिस्त्रियः, अतिस्त्रीन् । अतिस्त्रिणा अतिस्त्रिभ्याम् अतिस्त्रिभिः । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अतिस्त्रौ० अतिस्त्रिषु । आ० हे अतिस्त्रे । स्त्रीलिङ्गे अतिस्त्रीशब्दो मुख्यस्त्रीवत् । क्लीबे वारिवत् । पुनष्टादौ "वाऽन्यतः पु—" ॥ १ । ४ । ६२ ॥ वा पुंवत् ॥१३॥

**ईकारान्ता वाच्यलिङ्गा अतिलक्ष्मी-मुखाः समाः।**
**पृथुश्री-प्रमुखा भिन्नाः सेनान्युन्नी-मुखाः पृथक् ॥१४॥**

अतिलक्ष्मीशब्दः पुंस्त्रियोर्मुख्यलक्ष्मीवत्। क्लीबे वारिवत्। टादौ "वाऽन्यतः-" ॥१।४।६२॥ वा पुंवत्। आमि पक्षद्वयेऽप्यतिलक्ष्मीणाम्। आ० हे अतिलक्ष्मि०। एवमतितन्त्रीमुख्याः॥ पृथुश्रीमुखानां धात्वी-कारान्तत्वादियू पुंस्त्रियोर्मुख्यश्रीशब्दवत्। प्रक्रिया क्लीबे वारिवत्। टादौ स्वरे वा पुंस्त्वम्। पुंसि "वेयुवोऽस्त्रियाः" ॥ १।४।३०॥ "आमो नाम् वा" ॥ १।४।३१॥ प्राप्तिः। पृथुश्रिणा, पृथुश्रिया। पृथुश्रिभ्याम्। पृथुश्रिणे, पृथुश्रिये, पृथुश्रियै। इत्यादि। आमि पक्ष १ पृथुश्रीणां, पक्ष २ पृथुश्रीणां, पृथुश्रियाम्। आ० हे पृथुश्रि॥ एवं स्वक्तह्री-गतभी-आद्याः। यदा बुद्धिवाची धीशब्दः तदा स्त्रीलिङ्गः। शोभना धीर्यस्य यस्या वा इति बहुव्रीहौ सुधीशब्दो वाच्यलिङ्गः। ततः सुधीशब्दो लिङ्गत्रयेऽपि पृथुश्रीवत्। सुपूर्वः 'ध्यै' सुष्ठु ध्यायतीति "दिद्युद्—" ॥५।२।८३॥ इत्यादिना सुधीः विद्वद्वाची पुल्लिङ्गः। "धातोरिवर्ण—" ॥ २।१।५०॥ तस्य इय्। आ० हे सुधीः। सेनानीमुख्यानां विशेषो यथा–सेनानीः "क्विब्वृत्तेः-" ॥ २।१।५८॥ इति यत्वे सेनान्यौ सेनान्यः। सेनान्या सेनानीभ्याम्०। आमि सेनान्याम्। ङौ "निय आम्" ॥१।४।५१॥ इति सेनान्याम्। आ० हे सेनानीः हे सेनान्यौ हे सेनान्यः। स्त्रियामप्येवम्। परं 'स्त्रिया' इति अनुवर्त्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थम्। तेनात्र दै-आद्या न यथा—सेनान्य ब्राह्मण्यै। इत्यादि। क्लीबे ह्रस्वे सेनानि सेनानिनी सेनानीनि। टादौ स्वरे वा पुंस्त्वं सेनान्या, सेनानिना सेनानिभ्याम्०। सेनान्यै, सेनानिने। आमि सेनान्यां, पक्षे "ह्रस्वापश्च" ॥ १।४।३२॥ इति नामि सेनानीनाम्। ङौ सेनान्याम्। क्लीबे पक्षे ह्रस्वे कृते 'एकदेश' इति न्यायाद् आम्प्राप्तौ 'आगमाऽऽदेशयोरागमविधिर्बलवान्' इति नमः नागमे च कृते पुनर्न स्यात् 'सकृद्बाधित—' इति न्यायात्। सेनानिनि। आ० हे सेनानि। एवं उन्नी-ग्रामणी-मुख्याः॥ १४॥

**भिन्ना यवक्री-नी-प्रासभी-महानी-मुखास्तथा।**
**शम्भ्वाद्याः पुंस्युकारान्ताः समाः क्रोष्टु-विवर्जिताः ॥१५॥**

यवक्रीमुखानां विशेषो यथा—यवक्री-देवप्री-आदिषु "संयोगात्" ॥२।१।५२॥ इय्। नी-मी-पी-ली-सदृशेषु "धातोः-" ॥२।१।५०॥ इय्। प्राप्तभी-महानी-परमनी-आदिषु क्विव्वृत्त्यभावात् "क्विव्वृत्तेः—" ॥२।१।५८॥ य़त्वम्। न "धातोः—" ॥ २ । १ । ५० ॥ इय् ॥ यवक्रीः यवक्रियौ यवक्रियः। आमि यवक्रियाम्। आ० हे यवक्रीः। स्त्रियामप्येवं परं नित्यस्त्रीत्वाभावात् "स्त्रीदूतः" ॥ १।४।२९ ॥ इति न। क्लीवे ह्रस्वे यवक्रि यवक्रिणी यवक्रीणि। टादौ स्वरे वा पुंस्त्वम्। यवक्रिणा, यवक्रिया। यवक्रिभ्याम्। आमि यवक्रीणां, यवक्रियाम्। आ० हे यवक्रि। एवं नी-प्राप्तभी-महानी-मुखाः। परं नीशब्दे ङौ "निय आम्" ॥ १।४।५१ ॥ नियाम्। शंभुशब्दस्यापि अग्निवत् प्रक्रिया। एवं भानु-विभु-मुख्याः ॥ क्रोष्टुविशेषो यथा-"क्रुशस्तुनस्तृच् पुंसि" ॥१ । ४ । ९१॥ इति शेषघुटि तृच् "ऋदुशनस्-" ॥ १ । ४ । ८४ ॥ क्रोष्टा। "तृस्वसृनप्तृ—" ॥१। ४ । ३८ ॥ क्रोष्टारौ क्रोष्टारः। क्रोष्टारम् क्रोष्टॄन्। "टादौ स्वरे वा" ॥ १ । ४ । ९२ ॥ पुंस्येव वा तृच् क्रोष्ट्रा, क्रोष्टुना। क्रोष्टुभ्याम् क्रोष्टुभिः। आ० हे क्रोष्टा हे क्रोष्टारौ हे क्रोष्टारः। क्लीवे बहवः क्रोष्टारो यत्र वनं तद् बहुक्रोष्टुवनम् अत्र 'पुंसि' इत्युक्तं तृच् न। ततो जतुवत्। स्त्रियाम् ङीप्रत्यये "स्त्रियाम्" ॥ १ । ४ । ९३ ॥ इति तृचादेशे क्रोष्ट्री नदीवत् ॥१५॥

**धेनु-मुख्या उकारान्ताः स्त्रीलिङ्गाः सदृशक्रियाः।**
**जतु-प्राया उकारान्ताः समानाः स्युर्नपुंसके ॥१६॥**

धेनुशब्दो बुद्धिवत्। एवं प्रियङ्गुमुख्याः। कथं हे भीरु। स्त्रीपर्यायादूङि कृते भविष्यति। ये जातिवचनत्वमनिच्छन्तः ऊं ऊङं न मन्यन्ते तेषां मते भीरा इत्येव स्यात्। कथं हे सुतनुः अत्र तनू शब्दः। केषांचिन्मते संबोधने गुणो दृष्टो न भीरोः सुतनोः स्त्रियाम्। जतु वारिवत्। एवमस्त्रु-मुख्याः ॥ १६ ॥

**उकारान्ता वाच्यलिङ्गाः पटु-लघ्वादयः समाः।**
**ऊकारान्ताः पुंसि हूहू-नग्नहू-प्रमुखाः समाः ॥१७॥**

पुंसि शम्भुवत् । स्त्रियां धेनुवत् । वा ङ्यां पद्वी नदीवत् । क्लीबे जतुवत् । टादौ स्वरे "वाऽन्यतः–" ॥ १ । ४ । ६२ ॥ इति वा पुंस्त्वम् न० मापदल्न्यादि सुराबीजम् । हूहूः० हूहून् । सर्वत्र स्वरे सन्धिः ॥१७॥

**स्वयंभू-प्रतिभू-प्रायाः सदृशाः खलपूः पृथक् ।**
**एभ्यो वर्षाभू-पुनर्भू-शब्दयोरन्तरं मतम् ॥ १८ ॥**

स्वयंभूः "दृन्पुन—" ॥२ । १ । ५९॥ इति नियमात् "क्विब्वृत्तेः-" ॥ २ । १ । ५८ ॥ इत्यप्राप्तौ "धातोः—" ॥ २ । १ । ५० ॥ इत्युव् स्वयंभुवौ । अग्रेऽप्येवम् । एवमात्मभू-मनोभ्वाद्याः । खलपूः स्वरे "क्विब्वृत्तेः-" ॥ २ । १ । ५८ ॥ इति च वत्वं खलप्वौ ॥ वर्षाभूः स्वरे "दृन्पुनर्-" ॥ २ । १ । ५९ ॥ इति वत्वे वर्षाभ्वौ । पुनर्भूः वर्षाभूवत् । परं स्त्रीत्वात् "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ इति दै-आद्याः पुनर्भ्वै० । आ० हे पुनर्भु । वर्षाभूर्यदा मण्डूक्यां तदा स्त्रीलिङ्गः- पुनर्भूवत् ॥ १८ ॥

**स्त्रियामूदन्ता वध्वाद्या समा भ्रूर्भूश्च भेदभाक् ।**
**समा वाच्यलिङ्गा अतिचमू-प्राप्तवधू-मुखाः ॥१९॥**

वधूर्नदीवत् परं सेर्लोपो न वधूः । एवं ऊदन्ता रम्भोरू-लक्ष्मणोरू-मुख्याः । तथा कच्छू-जम्बूप्राया वधूवत् । जम्बू स्त्रीक्लीबलिङ्गः । ऊदन्तोऽयं षण्ढे "क्लीबे" ॥२ । ४ । ९७॥ इति ह्रस्वे उदन्तता । इयं जम्बूरिदं जम्बु जम्बूवृक्षफलं तथा । जम्बू वृक्षवाचकोऽपि स्त्रीलिङ्गः तथा च नैषधे- एतत्तरुः-" (११।८९) । भ्रूः स्वरे "भ्रूश्नोः" ॥२ । १ । ५३॥ इति उव् भ्रुवौ० । "वेयुवोऽ—" ॥ १ । ४ ॥ ३० ॥ इति वा दै-आद्याः भ्रुवै, भ्रुवे आ० हे भ्रूः । कथं हे सुभ्रु अत्र भ्रुरुकारान्तः । ऊङन्तस्य वा ह्रस्वे । भ्रूवत् भूः परं "धातोः—" ॥ २ । १ । ५० ॥ इति उव् । "वेयुवो-" ॥ १ । ४ । ३० ॥ इति वा दै-आद्याः । आमि भूनां, भुवाम् । ङौ भुवां, भुवि । अतिचमू-प्राप्तवधू-अल्पलावू-मुख्याः । पुंस्त्रियोर्मुख्यवधूवत् । क्लीबे ह्रस्वे जतुवत् । टादौ स्वरे "वाऽन्यतः-"॥ १ । ४ । ६२ ॥ इति पुंस्त्वम् विद्यानन्दे तु देवयजी-बह्वचम् आद्या वातप्रमीवदुक्ताः । देवयजीन् बह्वचमून् इत्यादि ॥ १९ ॥

धातूदन्ता वाच्यलिङ्गाः सकृल्लू-प्रमुखाः समाः ।
भिन्नाः कटप्रू-लू-प्रासलू-महाप्रू-मुखाः समाः ॥२०॥

सकृल्लूः । उन्नीसकृल्लूसदृशेषु स्त्रीप्रूवत् धातुसंबन्धो न संयोगस्ततो स्वरे " क्विवृत्ते—" ॥ २ । १ । ५८ ॥ इति वत्वे सकृल्वौ । एवं स्त्रियामपि । नित्यस्त्रीत्वाभावात् दै-आद्या न । सकृल्वे ब्राह्मण्यै । क्लीबे ह्रस्वः ततो मधुवत् । टादौ स्वरे वा पुंस्त्वम् । एवं खलूः सर्वसूः । कटप्रूशब्दस्य संयोगपरत्वात् लूशब्दे वृत्त्यभावात् प्रासलू-महाप्रूशब्दयोः क्विवृत्त्यभावात् यथाप्राप्तं स्वरे उव् कटप्रूः कटप्रुवौ० । आ० हे कटप्रूः । स्त्रियामप्येवम् । परं नित्यस्त्रीत्वाभावात् " स्त्रीदूतः " ॥ १ । ४ । २९ ॥ इति दै-आद्या न । क्लीबे ह्रस्वे मधुवत् । टादौ स्वरे वा पुंस्त्वम् । एवमक्षद्यू-आद्याः संयुक्तधातूदन्ताः ॥ २० ॥

ऋकारान्ताः पितृ-भ्रातृ-मुखाः पुंसि समक्रियाः ।
नृशब्दस्यान्तरं प्रोक्तं षष्ठ्यन्तवचने सति ॥ २१ ॥

पितृ "ऋदुशनस्—" ॥ १ । ४ । ८४ ॥ पिता । "अड्डौं च" ॥ १ । ४ । ३९ ॥ पितरौ० ॥ " शसोऽता सश्च नः पुंसि " ॥ १ । ४ । ४९ ॥ पितॄन् । स्वरे रत्वे पित्रा । "ऋतो डुर्" ॥ १ । ४ । ३७ ॥ पितुः २ । "ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ पितॄणाम् । "अड्डौं च" १ । ४ । ३९ ॥ पितरि । आ० "ह्रस्वस्य गुणः" ॥ १ । ४ । ४१ ॥ हे पितः ॥ "नुर्वा" ॥ १ । ४ । ४८ ॥ इत्यामि नृणां, नृणाम् ॥ २१ ॥

स्त्रियां मातृ-मुखाः प्रोक्ता ऋकारान्ताः समक्रियाः ।
स्वस्रादीनां पितृष्वसृ-मातृष्वस्रोस्तथाऽन्तरम् ॥२२॥

मातृ-दुहितृ-मुख्याः पितृवत् । परं शसि मातॄः । स्वसा " तृस्वसृ-" ॥ १ । ४ । ३८ ॥ इति घुटि आर् स्वसारौ ४ । स्त्रीत्वात् शेषं मातृवत् । स्वसृ स्त्री । शेषाः ७ पुंसि तेषां शसि नप्तॄन् इत्यादि । चारुस्वसृशब्दोऽपि पुंस्त्रियोः स्वसृवत् । क्लीबे वारिवत् । टादौ स्वरे वा पुंस्त्वं च । एवं शेषाः ७ ॥ २२ ॥

**वाच्यलिङ्गा ऋकारान्ताः कर्तृ-प्रभृतयः समाः ।**
**ऋकारान्ताः पितृ-मुख्याः पुंसि तुल्यक्रियाः स्मृताः ॥२३॥**

कर्त्ता " तृस्वसृ-" ॥१।४।३८॥ कर्त्तारौ ४ । शेषं पितृवत् । स्त्रियां ङ्यां रत्वे कर्त्री नदीवत् । क्लीबे वारिवत् । टादौ स्वरे वा पुंस्त्वम् । एवं तृजन्त-भर्त्तृ-भोक्तृ-मुख्याः ॥ सुमातृ पुंसि पितृवत् । क्लीबे क्लीबकर्त्तृवत् । आ० " मातुर्मातः-" ॥१।४।४०॥ इति अर्हे पुत्रे हे गार्गीमातः ॥ पितुः ऋः पितॄः अमृशसौ विना स्वरे सन्धिः । पित्रौ पित्रः । पितॄं पितॄन् ॥२३॥

**स्त्रियां पितृ-मुखास्तुल्याः क्लीबे सुपितृवत् पुनः ।**
**ऌकारान्ता वाच्यलिङ्गाः प्रियक्लृ-प्रमुखाः समाः ॥२४॥**

यदा तु पितुः ऋर्देवमाता तदा स्त्रीलिङ्गः । शसि पितॄः । शेषं पुंवत् । शोभना पितॄर्यत्र कुले इति क्लीबे ह्रस्वे सुपितृवत् । टादौ स्वरे वा पुंस्त्वम् ॥ पुंसि प्रियक्लृः । प्रियक्लॄन् । स्वरे सन्धिः । आमि प्रियक्लॄनाम् । स्त्रियामप्येवम् । शसि प्रियक्लॄः । क्लीबे प्रियक्लृ प्रियक्लृनी प्रियक्लॄनि २ । टादौ स्वरे वा पुंस्त्वम् । एवं प्रियगम्लृ-अतिक्लृ-मुख्याः ॥ २४ ॥

**ॡकारान्ता वाच्यलिङ्गाः प्रियक्लॄ-प्रमुखास्तथा ।**
**एकारान्ताः से-परमे-मुख्यास्तुल्यक्रिया मताः ॥२५॥**

प्रियक्लॄः इत्यादि प्रियक्लृवत् । परं तु आमि "ह्रस्वापश्च" ॥१।४।३२॥ न । प्रियक्लाम् । स्त्रियामप्येवम् । शसि प्रियक्लॄः । क्लीबे ह्रस्वे प्रियक्लृ प्राग्प्रियक्लृवत् । एवमतिक्लृ । सेः कामी स्मरप्रिया वा पुंस्त्रियोः सदृशा प्रक्रिया । सेः । स्वरे अय् सयौ० । " एदोद्भ्यां ङसिङसो रः " ॥ १ । ४ । ३५ ॥ सेः । मतान्तरेण वा सयः । आ० " अदेतः स्यमोर्लुक् " ॥ १ । ४ । ४४ ॥ हे से । एवं परमे ॥ २५ ॥

**ऐकारान्तो रैः पुंनार्योरोकारान्तस्तथैव गोः ।**
**औकारान्तो लौः पुल्लिङ्गो नौः स्त्रीलिङ्गे समक्रियौ ॥२६॥**

"आ रायो व्यञ्जने" ॥ २ । १ । ५ ॥ राः । स्वरे आय् रायौ । आ० हे राः । बहुरैः पुंसि स्त्रियां च मुख्यरैवत् । क्लीबे ह्रस्वे बहुरि बहुरिणी बहुरीणि २ । टादौ स्वरे वा पुंस्त्वं बहुराया, बहुरिणा । ह्रस्वे एकदेशविकृतस्य अनन्यत्वात् आत्वे बहुराभ्याम् । आ० हे बहुरि ॥ "ओत औः" ॥ १ । ४ । ७४ ॥ घुटि गौः गावौ गावः । "आ अम्शसोऽता" ॥ १ । ४ । ७५ ॥ गाम् गाः० । "एदोद्भ्यां ङसिङसो रः" ॥ १ । ४ । ३५ ॥ गोः २ । आ० हे गोः । स्त्रियामप्येवम् । चित्रा गावोऽस्य "गोश्चान्ते-" ॥ २ । ४ । ९६ ॥ पुंसि शम्भुवत् । स्त्रियां धेनुवत् । क्लीबे ह्रस्वे जतुवत् टादौ स्वरे वा पुंस्त्वम् । एवं द्यो नाकस्त्राची स्त्री गोवत् परं त्वस्य ङसिङसोर्मतान्तरेण वा र् द्योः द्यवः २ ॥ ग्लौः । स्वरे आव् ग्लावौ । आ० हे ग्लौः ॥ एवं नौः नावौ । सुनौः पुंस्त्रियोः समः । सुनौः सुनावौ । क्लीबे ह्रस्वे सुनु, सुनुनी सुनूनि । टादौ स्वरे वा पुंस्त्वं सुनुना, सुनावा ॥ २६ ॥

इति श्रीवायटगच्छीयश्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचंद्रानुस्मृते स्यादिशब्दसमुच्चये स्वरान्तशब्दोल्लासः प्रथमः प्रक्रमः । १ ।

---

**वाच्यलिङ्गाः कवर्गान्ताः स्वस्वोक्तप्रक्रियाजुषः ।**
**पुंसि स्त्रियां च सदृशा भेदभाजो नपुंसके ॥ १ ॥**

कान्ताः-'चकि तृप्तौ' सुष्ठु चकते सुचक्-"दीर्घङ्याब्व्यञ्जनात् सेः" ॥ १ । ४ । ४५ ॥ सिलुक् "विरामे वा" ॥ १ । ३ । ५१ ॥ सुचक्, सुचग् । स्वरे सन्धिः सुचकौ । "धुटस्तृतीयः" ॥२ । १ । ७६॥ सुचग्भ्याम्० । "नाम्यन्तस्था-" ॥ २ । ३ । १५ ॥ सुचक्षु, "शिट्याद्यस्य-" ॥ १ । ३ । ५९ ॥ सुचख्षु । तत्र रशब्दे दर्शितरूपसिद्धिं विना स्त्रियां व्यञ्जनान्ता पुल्लिङ्गसमा ज्ञेयाः । क्लीबे सुचक्, सुचग् सुचकी सुचङ्कि २ ॥ खन्ताः- चित्रलिख्- "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ चित्रलिक्, चित्रलिग् । स्वरे सन्धिः चित्रलिखौ । "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ चित्रलिग्भ्याम् । "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ कत्वे "नाम्यन्तस्था-" ॥ २ । ३ । १५ ॥ इति षत्वे

चित्रलिक्षु, "शिट्याद्यस्य द्वितीयो वा" ॥ १ । ३ । ५९ ॥ चित्रलिख्षु। क्लीबे चित्रलिक्, चित्रलिग् चित्रलिखी चित्रलिङ्खि २ । गन्ताः- 'कगे हसने' सुष्ठु कगति सुकग्, सुकक् स्वरे सन्धिः सुकगौ० । सुकग्भ्याम्० । "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ कत्वे "नाम्यन्तस्था-" ॥ २ । ३ । १५ ॥ षत्वे च सुकक्षु, "शिट्याद्यस्य-" ॥ १ । ३ । ५९ ॥ सुकख्षु । क्लीबे सुकग् सुकगी सुकाङ्गि ॥ सुष्ठु वल्गति सुवल्ग् "दीर्घ-" ॥ १ । ४ । ४५ ॥ सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ ग्लोपे सुवल् स्वरे सन्धिः सुवल्गौ० । "पदस्य" ॥ २ । १ । ८९ ॥ इति ग्लोपे सुवल्भ्याम्० । "पदस्य" ॥ २ । १ । ८९ ॥ ग्लोपे "नाम्यन्तस्था-" ॥ २ । ३ । १५ ॥ इति षत्वे सुवल्षु । आ० हे सुवल् । क्लीबे सुवल् सुवल्गी "र्लो वा" ॥ १ । ४ । ६७ ॥ सुवल्ङ्गि, सुवल्गि २ । घान्ताः- 'लाघृ' सुष्ठु लाघते सुलाघ् देवश्लाघ् सिलोपे "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ सुलाक् सुलाग् सुलाघौ० । सुलाग्भ्याम्० "अघोषे-" ॥ १ । ३ । ५० ॥ कत्वं षत्वं सुलाक्षु, सुलाख्षु । क्लीबे सुलाक्, सुलाग् सुलाघी सुलाङ्घि २ ॥ ङन्ताः-पठितो ङ् येन पठितङ् अत्राधुट्त्वान्न तृतीयः पठितङौ० । पठितङ्भ्याम् । "ङ्णोः कटावन्तौ शिटि नवा" ॥ १ । ३ । १७ ॥ अन्ते क् पठितङ्क्षु, पठितङ्षु । क्लीबे पठितङ् पठितङी पठितङ्गि २ ॥ १ ॥

**चन्ताः पुंस्यम्बुमुच्-प्रायाः स्त्रियां वाच्-प्रमुखाः समाः ।**
**वाच्यलिङ्गाः स्निग्धत्वच्-मूलवृश्च्-सुक्रुञ्च्-मुखा मताः ॥२॥**

"चजः कगम्" ॥ २ । १ । ८६ ॥ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ अम्बुमुक्, ग् । स्वरे सन्धिः अम्बुमुचौ । तृतीये अम्बुमुग्भ्याम् । अम्बुमुक्षु, अम्बुमुख्षु । एवं जलमुचाद्याः । वाक्, वाग् वाचौ । तृतीये वाग्भ्याम् । वाक्षु, वाख्षु । एवं त्वच्-स्फिच्-शुच्-ऋच्-रुच्-मुख्याः । स्फिच् घण्टिकापर्यायः । स्निग्धत्वक्, ग् स्निग्धत्वचौ । स्निग्धत्वग्भ्याम् । स्निग्धत्वक्षु, स्निग्धत्वख्षु । स्त्रियामेवम् । क्लीबे स्निग्धत्वक्, ग् स्निग्धत्वची स्निग्धत्वञ्चि २ । एवं सत्यवाच्-व्यक्तवाच्-मुखाः । मूलवृश्च्-"सस्य शषौ" ॥ १ । ३ । ६१ ॥ सिलोपे

"संयोगस्यादौ—" ॥ २ । १ । ८८ ॥ शूलोपे "यजसृज—" ॥ २ । १ । ८७ ॥ पत्वे "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ डे "विरामे वा" ॥ १ । ३ । ५१ ॥ मूलवृट्, मूलवृड् । स्वरे सन्धिः मूलवृश्चौ । "संयोगस्यादौ स्कोर्लुक्" ॥ २ । १ । ८८ ॥ शूलोपे "यजसृज—" ॥ २ । १ । ८७ ॥ पे, डे च मूलवृड्भ्याम् । "अघोषे—" ॥ १ । ३ । ५० ॥ टे मूलवृट्सु, "शिटयाद्यस्य—" ॥ १ । ३ । ५९ ॥ मूलवृठ्सु अत्र "पदान्तात् टवर्गात्-" ॥ १ । ३ । ६३ ॥ इति प्रतिषेधात् "सस्य शषौ" ॥ १ । ३ । ६१ ॥ न षत्वम् । स्त्रियामप्येवम् । क्लीबे मूलवृट्, मूलवृड् मूलवृश्ची "धुटां प्राक्" ॥ १ । ४ । ६६ ॥ धुट्जातिर्गृह्यते मूलवृंश्चि २ । सुष्ठु कुञ्चति इति सुकुञ्च्-सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ इति चूलोपे "युजञ्चक्रुञ्चो नो ङः" ॥ २ । १ । ७१ ॥ पदान्ते न् ङ् सुकुङ् स्वरे सन्धिः सुकुञ्चौ सुकुञ्चः । सुकुञ्चम् । सुकुञ्चा "पदस्य" ॥ २ । १ । ८९ ॥ इति चूलोपे "युजञ्चक्रुञ्चो नो ङः" ॥ २ । १ । ७१ ॥ इति ङे सुकुङ्भ्याम् । "ङ्णोः कटावन्तौ शिटि नवा" ॥ १ । ३ । १७ । इति च क् अन्ते वा सुकुङ्क्षु, सुकुङ्षु । स्त्रियामप्येवम् । क्लीबे सुकुङ् सुकुञ्ची सुकुञ्चि २ ॥ २ ॥

**प्राच्-प्राञ्च्-प्रमुखास्तुल्याः प्रत्यञ्च्-मध्वञ्च्-मुखाः समाः।**
**उदञ्च् भिन्नः पृथग् तिर्यञ्च् सध्र्यञ्च्-सम्यञ्च् समाविमौ॥**

प्रकर्षेण अञ्चति गच्छति क्विप् "अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ नलुक् प्राच्-सि "अचः" ॥ १ । ४ । ६९ ॥ धुटि नोन्तः सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ चूलोपे "युजञ्च्—" ॥ २ । १ । ७१ ॥ न् ङ् प्राङ् प्राञ्चौ प्राञ्चः । प्राञ्चम् "अच् च् प्राग् दीर्घश्च" ॥ २ । १ । १०४ ॥ अणिक्यधुटि यस्वरे अच् चपूर्वस्य दीर्घः प्राचः । प्राचा "चजः कगम्" ॥ २ । १ । ८६ ॥ च् क् "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ क् ग् प्राग्भ्याम् प्राग्भिः । प्राचे० । प्राचः २ । "चजः कगम्" ॥ २ । १ । ८६ ॥ "नाम्यन्तस्था—" ॥ २ । ३ । १५ ॥ सु षु प्राक्षु, शिड्याद्यस्य –" ॥ १ । ३ । ५९ ॥ प्राख्षु । यदा तु प्राञ्चति प्रपूजयति

